

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

आगस्ट् - २०१९ रू.५!-

श्री प्रतिवादिभयङ्करम्
अण्णन्स्वामिजयन्ती

०१-०८-२०१९



श्री वै.वि.सुब्बारेड्डि वर्यः तिरुमल श्रीवेङ्कटेश्वरस्वामिनः दर्शनं प्राप्तवान्।
एषः २२-०६-२०१९ दिनाङ्के
ति.ति.दे.धर्मकर्तृमण्डल्याः नूतनाध्यक्षरूपेण प्रमाणस्वीकारं कृतवान्।




अस्मिन् सन्दर्भे एतस्मै श्रीस्वामिनः चित्रपटस्य
प्रदानं कुर्वन् ति:ति:दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिङ्गाल्, ऐ.ए.एस्., वर्यः,
तदानीन्तन तिरुमल संयुक्तकार्यनिर्वहणाधिकारी श्री के:एस्. श्रीनिवासराजु, ऐ.ए.एस्., वर्यः,
एवञ्च तदानीन्तन तिरुपति संयुक्त कार्यनिर्वहणाधिकारी श्री वि:लक्ष्मीकान्तम् ऐ.ए.एस्.,वर्यः।





श्री पि:बसन्तकुमार्, ऐ.ए.एस्.,वर्यः, तिरुमल श्रीवेङ्कटेश्वरदर्शनं प्राप्तवान्।
एषः श्रीस्वामिनः आलये ०४.०७.२०१९ दिनाङ्के ति:ति:देवस्थानस्य संयुक्तकार्यनिर्वहणाधिकारी (तिरुपति)
रूपेण प्रमाणस्वीकारं कृतवान्। अस्मिन् सन्दर्भे एतस्मै श्रीस्वामिनः प्रसादान् समर्पयन्तः ति.ति.दे. अधिकारिणः



स्थानपरिवर्तनावसरे गच्छन्तं ति.ति.देवस्थान संयुक्त कार्यनिर्वहणाधिकारिणं (तिरुमल)
श्री के.एस्. श्रीनिवासराजु, ऐ.ए.एस्., वर्यं श्रीस्वामिनः चित्रपटेन सत्कुर्वन्तः
ति.ति.दे. उद्योगिनः (०४-०७-२०१९)



ति.ति.देवस्थान संयुक्त कार्यनिर्वहणाधिकारी (तिरुपति)
श्री वि.लक्ष्मीकान्तम्, ऐ.ए.एस्., वर्याणां पदवीविरमण (३०.०६.२०१९) सभा



# गीतामृतम्

धृतराष्ट्र उवाच -

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ।।

(भगवद्गीता १/१)

हे सञ्जय! धर्मक्षेत्ररूपी कुरुक्षेत्रे समवेताः युयुत्सवः मम एवं पाण्डोः पुत्राः किमकुर्वत?

# सङ्कीर्तनम्



नन्दकधर नन्दगोपनन्दन
कन्दर्पजनक करुणात्मन् ॥ नन्दकधर ॥
मुकुन्दकेशवमुरहर
सकलाधिप परमेश्वर देवेश
शुकवरदसवितृसुधांशुलोचन
प्रकटविभव नमो परमात्मन् ॥ नन्दकधर ॥
ध्रुवपाञ्चालीस्तुतिवत्सल
माधव मधुसूदन धरणिधर
भुवनत्रयपरिपोषण तत्पर
नवनीतप्रिय नादात्मन् ॥ नन्दकधर ॥
श्रीम (ा) न् वेङ्कटशिखरनिवास
महामहिमन् निखिलाण्डपते
कामितफलभोगप्रद ते नमो
स्वामिन् भूमान् सर्वात्मन् ॥ नन्दकधर ।

- अन्नमाचार्यकृतसंस्कृतसङ्कीर्तनम्

# तिरुमलगिरिषु वनसम्पत्तिः

पत्रं पुष्पं फलं तोयं, यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः।।

इति गीतावचनम्। भक्त्या दत्तं किमपि उपर्युक्तं स्वीकरोमीत्युक्तवान् भगवान्। पञ्चभक्ष्यानि परमान्नानि भवन्तिचेदपि तेषां प्रयोगम् अत्र न कृतम्। फल-पुष्प-तोयादीनि नित्यनूतनानि। तानि निर्मल-सञ्जीवनी रूपाणि। तेषां जीवनसत्यं स्मरन् ''कोऽहम्'' इत्युच्यमानः मानवः त्यागैकधनीरूपेण वर्धतामिति सः भावितवान्। किन्तु बुधाः जनसन्दोहात् दूरे गिरिषु, कन्दरेषु, गुहासु, वनवीथिषु, आश्रमेषु स्थित्वा तरन्तु इति बोधितवन्तः। एवं परमात्मार्चनायां बहुमूल्यान्, निर्मलान् समर्प्य मानवः मनः पावित्र्यं, पक्वतां च इतोपि दृढं कृतवान्।

नामग्रामरहितं परमात्मानं एकनाम्ना ग्रामस्य कोणे प्रतिष्ठापन- पूजनानां प्रारम्भानन्तरं मानवः आश्रमान् कल्पितवान्। नामजपयज्ञेन साकं फल-पुष्पयागान् कारितवान्। परमात्मनः सन्दर्शनान्दपारवश्ये निमग्नः सन् - ''अभिषेकप्रियः शिवः, अलङ्कारप्रियः विष्णुः, नमस्कारप्रियो भानुः'' इति वदन् नूतनतरेभ्यः विवृतवान्। तस्मिन्नेव पथे आलयेषु नानाविधोत्सवान् व्यवस्थीकृतवान्। जन्मसार्थकं कर्तुं जीवानां प्रयत्नप्रतिबिम्बान्येव एतानि। किन्तु कालः परिवर्तितः। आडम्बरः अम्बरम् आरूढः। आर्तिः नष्टा अर्थाशा च प्रवर्धा। तत्फलितरूपेण वृक्षाः न्यूनाः जाताः, जलस्रोतांसि पातालं प्राप्य पृथ्वी पाषाणसदृशतया परिवर्तनशीला जाता।

अतः एनं विषयमवगम्य तिरुमलतिरुपतिदेवस्थानेन वनसम्पदां परिरक्षितुं नानाविधान् कार्यक्रमान् प्रारम्भः कृतः। नन्दनोद्यानानि, दिव्यारामवाटिकाः च निर्माय प्राकृतिकसहजत्वं पुनः प्रतिष्ठापितुं, तिरुमलगिरिषु अपि वृक्षसम्पदां हरितमयं कर्तुं नानाविधान् प्रकल्पान् कल्पयन् एव अस्ति।

स्वनैजरक्षणार्थं तथा च पुनः सस्यश्यामलं व्यापयितुं वनजीवनकांक्षातत्पराः सर्वेऽपि स्वीयेषु प्रान्तेषु मुख्यतया आराधनास्थलेषु सन्नद्धाः भवेयुः। वनसम्पत्या बिना देशे अशान्तिः एव व्याप्नोतीति ज्ञातव्यम्।

मनुष्येभ्यः पूर्वमस्ति वनसम्पत्तिः! सा हर्तुं शक्नोति अस्मद् विपत्तिः!!

आगच्छन्तु! वृक्षान् स्थापयामः! वनसम्पत्तिं वर्धयामः!!



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०५

## आगस्ट् - २०१९

श्रीविकारीनामसंवत्सरस्य आषाढकृष्ण अमावस्या तः
भाद्रपदकृष्णप्रतिपत् पर्यन्तम् - १९४१




**मुखचित्रम्** – श्रीप्रतिवादि भयङ्करम् अण्णन्स्वामी (तिरुमल श्रीस्वामिनः 'सुप्रभातम्' रचनाकर्ता)
**अन्तिमरक्षापुटः** – नवनीतकृष्णः (तिरुमल श्रीस्वामिनः आलयः)


गौरवसम्पादकः-
श्री अनिलकुमार सिङ्घाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

वर्णचित्रविन्यासकः - श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,

सूचनानाम्, आक्षेपाणां च कृते

sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-



# कृष्णस्य बाललीलाः

## (सरलया संस्कृत-गिरा वर्णिताः)

- डा.बलदेवानन्दसागरस्य व्यासात्...

भारते यदुवंशः प्रमुखेषु राजवंशेषु अन्यतमः आसीत्। अस्य वंशस्य अनुवर्तिनो यादवाः गोपालकत्वेन विख्याताः जाताः। ते सुख्याते सुरम्ये प्रदेशे गोकुले निवसन्ति स्म। यादवानां प्रमुखः नन्द-गोपः तस्य पत्नी यशोदा च, आनन्द-सन्दोहं कृष्णं दत्तक-पुत्रत्वेन स्वीकृत्य तं गोकुलम् आनीतवन्तौ। गोकुलस्य अनेन नूतनेन संयोगेन यादवानां प्रसन्नता द्विगुणिता जाता।

कृष्णः गोकुल-वासिनां जीवनेषु अतुल्यं परिवर्तनम् अकरोत्। प्रेम्णा स्नेहेन च गोपाल-इति नाम्ना ख्यातः कृष्णः अतितरां चञ्चलः सर्वैः साकं लीलया व्यवहरति स्म। यद्यपि तस्य चञ्चल-बाल-लीलाभिः नैकवारं प्रतोदिताः सन्तोऽपि ते सर्वे गोपालाय स्निह्यन्ति स्म।

अनुमिनोतु, गोपालाय अधिकतमं किं रोचते स्म? भवतु, दुग्धं नवनीतं च। प्रायेण प्रतिदिनमेव, यदा वत्सः निज-मातुः दुग्धं पातुम् उपक्रमते स्म, तद्-दृश्यं रमणीयं भवति स्म।

दुग्ध-पानानन्तरं कृष्णः गोवृन्दस्य पश्च-भागे निलीयते स्म। यदा यादवस्त्रियः गो-दुग्धाहरणार्थम् आयान्ति स्म, कृष्णः पुच्छं सहसा आकर्षयति स्म।

भवता किं कदाचित् एवं श्रुतं यत् कश्चन गोः पुच्छम् आकर्षयति चेत् तदा किं गौः स्थिरा अभविष्यत्? नैव... एषा स्यात् कूर्देत्... दुग्ध-पात्रं च, आस्फालयेत्...! एतत् सर्वं दृष्ट्वा कृष्णः प्रमुदितः सन् मुक्त-मनसा हसति दूरे च पलायते स्म।

एकदा कृष्णः अतितरां चाञ्चल्य-पूर्णां लीलाम् अकरोत्। सः निजगृहस्य दुग्ध-भण्डारण-कक्षं गतवान्, यत्र दुग्धं मृत्तिका-पात्रे बालैः अप्राप्ये उन्नते स्थाने आधीयते स्म। किं जानाति भवान् कृष्णेन किम् आचरितम्? सः पार्श्व-स्थात् कक्षात् चूर्णिका-प्रस्तरमेकम् लोठयित्वा तत्रानीय तस्योपरि च स्थितवान्।

अहो काठिन्यम्...! साम्प्रतमपि सः दुग्ध-पात्रं स्प्रष्टुं नैव अपारयत्। सः कानिचित् काष्ठानि प्रकीर्ण-फलकानि च समेत्य मिथः संयोज्य प्रस्तर-खण्डोपरि स्थापितवान्। तदुपरि महता प्रयासेन पादाङ्गुलिभिः आधृतः सन् दुग्ध-पात्रं बलात् स्प्रष्टुम् अपारयत्।

सहसा काष्ठानि प्रकीर्ण-फलकानि च अवपतितुम् आरभन्त। कृष्णः पात्ररज्जुं धृत्वा ''अम्ब! अम्ब!! कृपया आगच्छतु...!!! साहाय्यं करोतु... अम्ब...!'' इति सोत्कण्ठं मातरम् आकारयत्।

तस्मिन् स्थले सर्व-प्रथमं कृष्णस्य भ्राता, बलरामः प्राप्तः, नभसि दोलायमानं कृष्णं दृष्ट्वा बलरामः सानन्दं मातरम् आकारयत्, ''मातः सपदि आगच्छ! कृष्णः नभसि दोलायते... हा... हा... हा...!''

एतत्-संक्षोभं श्रुत्वा यशोदा, राधया तत्-सखीभिः च साकं धावन्ती तत्र आगता। राधा कृष्णस्य सखी आसीत्। कृष्णं दृष्ट्वा यशोदा साश्चर्यं अवदत् - "उद्धत! बाल!, अहं दुःखितास्मि त्वत्तः...!"

कृष्णः यदा अधः अपश्यत्, सः राधां तस्याः अन्यसखीः च अपश्यत्, तदा सः समधिकेन तार-स्वरेण अवदत् - "अम्ब! कृपया... अम्ब!! कृपया... साहाय्यं करोतु... अम्ब...! मां नीचैः अवतारयतु...!!"

इदं श्रुत्वा कृष्णे कृतदया यशोदा तम् अवातारयत्। परञ्च, कृष्णः साम्प्रतमपि हताशः आसीत्, अतः यशोदा किम् अकरोत्? अस्तु... किञ्चित् नवनीत-पिण्डं दत्वा तं प्रसादितवती।



एकदा, कृष्णस्य अन्यतमः सखा बलरामम् उपगम्य अवदत्, "राम! पश्यतु, कृष्णः मृत्तिकां खादति!" अयं कृष्णस्य ताडनं वाञ्छति स्म। निश्चयेन, मृत्तिकां खादन्तं कृष्णं यदि यशोदा पश्यति चेत् नूनं सा तं ताडयेत्। इदमेव असौ सखा ईच्छति स्म।

बलरामः विनैव काल-यापनम्, धावन् एव यशोदाम् उपगम्य तां वार्ताम् इमाम् अश्रावयत्। रुष्टा यशोदा बलरामेण साकं कृष्णम् अन्वेष्टुं निर्गता। तैः दूरं नैव गमनीयम् आसीत्। सः तत्रैव आसीत्। तम् उपगम्य यशोदा अपृच्छत्, कृष्ण! कथय मां, किं त्वया मृत् भक्षिता?" नैव मात...! नैव भक्षिता!" कृष्णः अवदत्।

यद्यपि यशोदा तं पुनः पुनः पृष्टवती, कृष्णः तुल्यमेव उत्तरं प्रादात्। परञ्च, यशोदा तस्मिन् विश्वासं नैव कृतवती। कृष्णस्य हस्तौ दृढं तस्य पृष्ठभागे बद्ध्वा अपृच्छत्, "कृष्ण! मुधा मा वद! यदि त्वम् अलीकं वदिष्यति, ताडयिष्यामि। मुखम् उद्घाटय। तव मुखान्तं निरीक्षे।" कृष्णः सस्मितं निज-मुखम् उदघाटयत्। यशोदा अतितराम् आघाताहता जाता। मुखाभ्यन्तरं तया यद् अवलोकितम्, सा नासीत् मृत्तिका, परञ्च वसुधा, सूर्यः, चन्द्रमा, नक्षत्राणि..., किम्बहुना, समग्रं जगत्।

इदं सर्वं दृष्ट्वा किञ्चित् स्थिरताम् अवाप्तुकामा यशोदा कृष्णस्य मुखे गोकुलम् अवालोकयत्। अपि च, कृष्णस्य अनावृत-मुखस्य सम्मुखं स्थिताम् आत्मानमपि विलोकितवती। परम-दुःखिता यशोदा कृष्णं सोत्कण्ठम् आश्लिष्य प्रार्थितवती। कृष्ण! कृपया निजमुखं पिधातु... अनावृतम् इदं स्वीयं मुखं पिधातु कृपया...! सस्मैरं कृष्णः स्वकं मुखं पिहितवान्।

एकदा यदा यशोदा दधि-मन्थनं करोति स्म, तदा कृष्णः कक्षाभ्यन्तरम् आगतः। "प्रिय-वत्स! किं नवनीतं वाञ्छसि...?" यशोदा अपृच्छत्। कृष्णेन मूर्धावधूननं कृत्वा न्यक्कृतम्। कृष्णः स्व-मातुः दुग्धं पातुम् इच्छति स्म। ततः परम्, यशोदा तं दुग्धं पाययितुम् आरभत। किञ्चित् कालानन्तरमेव यशोदा ज्ञातवती यत् चुल्लिकोपरि प्रक्वथनार्थं स्थापितं दुग्धं पात्राद् बहिः निस्सरति। सा सहसा उत्थाय कृष्णं दूरे अपसारितवती। भवान् कल्पयितुं शक्नोति यत् कृष्णः कियान् रुष्टः सञ्जातः? क्रोधाविष्टः सः तत्रस्थं सर्वमपि नवनीतं रंहसा खादितवान्। इतोऽपि अधिकतर-रुष्टः कृष्णः पार्श्वस्थं क्षीर-पात्रं विकीर्य क्षीर-पानार्थम् अनुज्ञातवान्। ततः परमसौ गृहात् तूर्णं निःसृतः।

परावर्तितवती यशोदा अवालोकयत् यत् विकीर्णं दुग्धं मार्जारः अवलिहति स्म, नवनीतं किञ्चिदपि अवशिष्टं नासीत्।

यशोदा वस्तुतः क्रुद्धा अजायत, "गोपालेन अतितरां तोदिताऽस्मि, नूनमसौ सम्यक्तया ताडनीयोऽस्ति। ततः परमेव सः सुशिष्टो भविता"-सा विचारितवती। यशोदा रज्जुना कृष्णं बद्ध्वा रज्जोः अपरान्तं उलूखलेन सार्धम् अबद्ध्नात्।" उत्पातकारिन् बाल! अधुना त्वं किं कर्तुं प्रभवसि-इति ज्ञास्यामि! किञ्चित् कालार्थं अत्रैव तिष्ठ!!"

प्रमुदितः बलरामः तन्मित्राणि च तत्र आगतानि। ते कृष्णं उपाहसन् ततः परं क्रीडितुं निर्गताः। वराकः कृष्णः! सः अतितराम् एकाकी अवर्तत!!

किञ्चित् कालानन्तरं कृष्णः सत्यं हि अतिरुचिम् अभजत। किं भवान् जानाति यत् तेन किं कृतम्? सः पश्चवर्तिनम् उलूखलम् आकर्षयन् चलितुम् आरभत। ततः प्रचलन् कृष्णः पार्श्वस्थं वृक्ष-द्वयम् अपश्यत्। किं भवान् इदं ज्ञातुं नितरां उत्सुकः नास्ति यत् ततः परं कृष्णेन किम् आचरितम्? सः केवलं वृक्ष-द्वयस्य मध्यात् प्राचलत्। अपि च, उलूखलः तयोः मध्ये अवरुद्धः एव आसीत्। कृष्णः स्व-पूर्ण-शक्त्या उलूखलम् आकर्षयत्। अपि च, ततः परं किं घटितम्? वृक्षद्वयमपि उन्मूलितं जातम्। अनुवर्तिनि क्षणे उन्मूलित-वृक्ष-द्वयात् देवौ समुत्पन्नौ। एतौ देवौ वृक्ष-योनौ समुत्पन्नार्थं शापितौ आस्ताम्। कृष्णः स्व लीलया एव तौ शापमुक्तौ व्यदधात्। कृष्णाय निज-कृतज्ञतां समर्प्य तौ स्वर्गं परावर्तितौ। वृक्षयोः उन्मूलनस्य महारावं श्रुत्वा गोकुलस्य प्रत्येकमपि निवासी धावन्निव तत्रागतः। कृष्णः प्रहसन्निव तत्र स्थितः आसीत्। नन्दगोपः कृष्णम् उन्मोचितवान्।

किम् अद्भुतं घटितम्? द्वौ विशालौ वृक्षौ अप्रतिहतौ, सहसा उन्मूलितौ जातौ। "इदन्तु कस्यचित् अभिशापस्य उत्पात-जातम्।" अनेके यादवाः विचारितवन्तः। "अस्मात् आत्मानं रक्षितुम्, अस्माभिः



किं करणीयम्? स्थानमेतत् परित्यजेम?" एवं हि, यादवाः गोकुलं परित्यज्य वृन्दावनं प्रति याताः।

दिनानि व्यतीतानि। कृष्णः बलरामः च पशु-पालन-योग्यौ सञ्जातौ। तौ अपि अन्यैः गोपालकैः सह गोचारणार्थं प्रयातुम् आरभताम्। तयोः अम्बा मध्याह्न-भोजनार्थं प्रतिदिनं ताभ्यां दधि-मिश्रितम् ओदनं ददाति स्म। ते गोपालाः आदिनं पशुभिः सार्धं परितः परिभ्रमन्ति स्म।

एकदा, किञ्चित् अतितरां अद्भुतं घटितम्। कृष्णस्य केचन सखायः गावः च विलुप्ताः जाताः। एते कृष्णस्य वेणुगानं श्रोतुं तस्य समीपम् उपयान्ति स्म। ते सर्वेऽपि कुत्र प्रयाताः? निज-वंशीं वादयन् कृष्णः विलुप्तानि मित्राणि गाः च अन्वेष्टुम् आरभत।

सुदीर्घ-कालं यावत् अन्वेषणानन्तरमपि सः न कमपि प्राप्तवान्। तदा कृष्णः अन्वभवत् यत् ब्रह्मदेवः प्रवञ्चनया एवं क्रीडति! ब्रह्मा, येन समग्रमपि ब्रह्माण्डं सृष्टम्। सः कृष्णं परीक्षितुं गोपालान्, गाः च गोपायितवान्। किं भवान् जानाति? तदा कृष्णेन किम् आचरितम्?

निज-विलुप्तानां मित्राणां गवां च स्थाने सः तेषां तासां च प्रतिकृतीः विरचितवान्। सायङ्काले कृष्णः प्रतिदिनमिव निज-मित्रैः गोभिः च साकं गृहं प्रतिनिवृत्तः। ब्रह्मदेवः असमञ्जसताम् अन्वभवत्। कृष्णं परीक्षितुं गोपायितानां गवां गोपालानां च विषये अधुना मया किं करणीयम्?''

दिनानि व्यतीतानि। अन्ततः, ब्रह्मदेवः कृष्णस्य समक्षम् उपस्थाय न्यवेदयत्, ''कृपया मां क्षम्यताम्। केवलं भवन्तं परीक्षितुं वाञ्छामि स्म। अत एव मया गोपालाः गावः च चोरिताः गोपायिताः च। एवम् इदम् आचरितम्! अहं जानामि - भवान् साक्षात् पुरुषोत्तमस्य नारायण-विष्णोः अवतारः।''

सस्मितः कृष्णः ब्रह्मदेवं न्यगादीत् - ''भगवान्! भवता मम मित्राणि पशवः च गोपायिताः, परं मया तु सायम् एते साकमेव गृहं नेतव्याः आसन्। अत एव, मया एते पुनः सृष्टाः सन्ति।''

एतत् श्रुत्वा, ब्रह्मदेवः अभिघोषितवान् - ''अहं स्वीयं पराजयं स्वीकरोमि। गोपायिताः सर्वाः गावः गोपालाश्च मया प्रत्यानीताः। परञ्च विशङ्के यत् भवता प्रकल्पितानां गवां गोपालानां च किं भविष्यति इति?''

कृष्णः सस्मितं अङ्गुलिं निर्दिशन् न्यगादीत् - ''पश्यतु!'' ततः परं ब्रह्मदेवेन किं दृष्टम्? कृष्णेन प्रकल्पिताः सर्वाः अपि गावः यादवाश्च स्वयं भगवतो विष्णोः स्वरूपतां परिणताः। प्रत्येकमपि विष्णोः नाभितः कमलं प्रादुरभूत्। प्रत्येकमपि कमले ब्रह्मदेवस्य प्रतिमूर्तिः उपविष्टा आसीत्। आश्चर्यचकितः ब्रह्मदेवः एतत् सर्वं संवीक्षते स्म। ततः परं सः बद्ध-कराञ्जलिः कृष्णाय प्रणिपातं व्यदधात्। अनुवर्तिनि क्षणे, विष्णोः सर्वाण्यपि प्रतिरूपाणि एकस्मिन् समन्वितानि सन्ति कृष्णे विलीनानि। कृष्णाय आदराञ्जलीन् अर्पयित्वा ब्रह्मदेवः प्रतिनिवर्तितः। भगवतः विष्णोः अवतारः, भगवान् कृष्णः स्मितं व्यदधात्। परः सहस्रं सूर्य-प्रभाभिः प्रकाशितः अवर्तत।

कृष्णः न कमपि किञ्चिदपि अवदत् यत् किं किं घटितम् इति। वृन्दावने सर्वं यथावत् सञ्जातम्, तथा च, कृष्णः सर्वैः निज-मित्रैः सह सुखम् आनन्दम् च अनुभवन् व्यराजत।



# 'सप्तगिरि' ग्राहकेभ्यः सूचनाः

सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।

१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च sapthagiri_helpdesk@tirumala.org द्वारा सूचयितुं शक्नुवन्ति।

२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवरणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।

३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा sapthagiri_helpdesk@tirumala.org द्वारा वा सूचयन्तु।

४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!



# यूनां कृते आवश्यकं भवति सात्त्विकसुखम्

भगवद्गीता - युवानः



तेलुगु मूलम् - डा॥ वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - श्रीमती वै.एन्.एल्.बि.टि.एस्.देवी (बाला चिर्रावूरि)

मानवाः सर्वेऽपि सुखमेवाभिलषन्ति। केचित् सुखं केचिच्च दुःखं न ईहन्ति। केवलं मनुष्याः एव न पशुपक्ष्यादिषु प्राणिष्वपि इदमेव अनुवर्तते। किन्तु मानवस्य पशुपक्ष्यादीनां च मध्ये भेदः एको वर्तते - यत् सुखस्य अपेक्षा कीदृशी इति मानवः निश्चयं कर्तुं शक्नोति किन्तु पशुः तथा निर्णेतुम् असमर्थः। एतस्य मुख्यकारणं भवति पशुपक्ष्यादिषु विस्मरणशक्तिरधिका; नोचेत् बुद्धेरुपयोगं न जानन्ति इति वक्तव्यम्। भगवद्गीतायाम् आचार्यः एकं मुख्यविषयमुपदिशन् शान्तिं विना सुखं न लभ्यते इति अकथयत्। अयं विषयः सावधानेन ज्ञातव्यः। सुखाभिलाषी प्रथमतः शान्त्यर्थं प्रयत्नवान् भवेत्। कथम्? मनुष्यः प्रशान्तचित्तेनैव स्वाभीष्टसिद्धिं प्राप्नोति। नाम शान्त्या एव विजयी भवेत्। तत्पश्चात् निश्चयेन सुखं प्राप्नोति।''हे सीतान्वेषणकार्ये कार्यकर्तृषु वानरेषु आञ्जनेयोऽपि एकः। स्वकीयां शक्तिम् अविज्ञाय यदा सः निष्क्रियेण स्थितो भवति जाम्ववन्तः अन्ये वानरा अपि तस्मै प्रोत्साहं कुर्वन्ति। पश्चात् हनुमतः हृदयं सानंदं शान्तिं च समधिगच्छति। तदर्थमेव स हनुमान् शान्तमयहृदयेन सुनिश्चयेन वानरानुद्दिश्य ''सीतामातरम् अन्विष्य वार्ताम् आनेष्यामीति तावत्पर्यन्तं समुद्रतटे एव स्थातव्यम्'' इति उक्त्वा सागरं लङ्घितवान्। चित्तशान्ति द्वारा कार्यविघ्नानि न सम्भविष्यन्तीति नास्ति। अवश्यम् अवरोधाः अपि अगच्छन्ति। तथापि हनुमान् तान् अवरोधान् लीलया उल्लङ्घ्य विजयं संप्राप्य पुनः श्रीरामसन्निधिं प्रत्यागमत्। इदमेव शान्त्या विजयसिद्धिः; विजयात् सुखञ्च।

भगवद्गीतायां भगवान् अस्मिन् विषये किंचित् पुरस्तात् गत्वा सुखेऽपि त्रैविध्यमस्तीति अकथयत्। गीतोपदेशात् यः सात्विकसुखाय प्रयतमानो भवति सः सर्वदुःखानि अधिगच्छतीति विद्यते। हे भरतवंशशार्दूल! इतः त्रिविधानि सुखानि मया उपदेक्ष्यानि। तानि मत्तः श्रुणु! तेषु बद्धजीवः योगमवाप्नोति। कदाचित् समस्तदुःखानि अपि अधिगच्छति। (भगवद्गीता १८-३८)

''यत् आरम्भे विषतुल्यमपि अन्ते अमृतमयं भवति, यत् मनुजम् आत्मानुभूत्यै जाग्रतं करोति तदेव सात्विकसुखमिति मन्यते।'' सात्विकसुखे प्रथमतः तपः वर्तते। तपोऽपि विषतुल्यमिव प्रतिभाति। परन्तु लक्ष्यसाधनायां यो मग्नो भवति सः शारीरिकतपःक्लेशात् पलायनं न करोति। पञ्चवर्षात् दशवर्षपर्यन्तमपि अनुदिनं पञ्च षड् होरात्मकं कालं यः भूरिपरिश्रमं करोति सः 'ओलिम्पिक्' मध्ये स्वर्णपतकं प्राप्तुं शक्नोति। स्वर्णपतकप्राप्तिसमयस्थ क्षणमात्रमपि तस्य च्छायाचित्रं जीवनपर्यन्तं सुखं प्रापयति। आनन्दं यच्छति। तथैव जिह्वया ग्राह्यमानं तिक्तमेव शरीराय सुखं ददाति। कारवेल्ली, निम्बपत्राणि तिक्तान्येव भवन्ति। किन्तु तानि आरोग्यप्रदायकानि भवन्ति।

मिष्टपदार्थं जिह्वायाः रुचिकरं भवति। तदेव शरीरस्य हानिं करोति। सात्विकसुखेच्छुकाः सात्विकव्यसनपराः भवेयुः। सात्विककार्याण्येव कुर्युः। मानवाः सात्विकभावनामेव प्राप्नुयुः। तर्हि एव स्वास्थ्यम्, मनः, बुद्धिश्च सम्यक् भविष्यन्ति। विजयं प्राप्येत। चरमे निश्चयेन ते सुखभागिनः भवेयुः।



# तिरुमल श्रीस्वामिने २०१९ जून् १४ तः १६ पर्यन्तं समाचरितस्य ज्येष्ठाभिषेकमहोत्सवस्य दृश्याणि















## २०१९ जून् १२ तः १६ पर्यन्तं श्रीनिवासमङ्गापुरस्थ श्रीकल्याणवेङ्कटेश्वरस्वामिनः आलये ति.ति.दे. निर्वहित बालालय-अष्टबन्धन-महासम्प्रोक्षणदृश्याणि



श्री कल्याणवेङ्कटेश्वरस्वामिने, उभयदेवीभ्यश्च स्नपनतिरुमञ्जनम्



अष्टबन्धनलेह्यं नवनीतेन सह अवहननं कुर्वन् निर्माणदृश्यम्



पवित्रजलैः ति.ति.दे. अर्चकबृन्दः, ति.ति.दे. कार्यनिर्वहणाधिकारी



महाशान्त्यभिषेकः



श्री कल्याणवेङ्कटेश्वरस्वामिनः गर्भालयशिखरस्य महासम्प्रोक्षणकार्यक्रमः



महापूर्णाहुतिः

श्रीकल्याणवेङ्कटेश्वरस्वामि आलयः,
श्रीनिवासमङ्गापुरम्

# अप्पलायगुण्टायां १३-०६-२०१९ तः २१-०६-२०१९ पर्यन्तं समाचरितस्य श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवदृश्याणि



ध्वजारोहणम्



मौक्तिकमण्डपवाहने उभयदेवीभ्यां सह श्री प्रसन्नवेङ्कटेश्वरस्वामी



कल्पवृक्षवाहनोपरि उभयदेवीभ्यां साकं श्री प्रसन्नवेङ्कटेश्वरस्वामी



सर्वभूपालवाहनोपरि श्रीप्रसन्नवेङ्कटेश्वरस्वामी



हंसवाहने श्री प्रसन्नवेङ्कटेश्वरस्वामी



सूर्यप्रभावाहने श्री प्रसन्नवेङ्कटेश्वरस्वामी



अप्पलायगुण्टा पुरवीथिषु श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः रथोत्सवः

हरिततोरणम्



# गोदादेव्याः जन्मनक्षत्रोत्सवः

## गोविन्दस्य पुरिशै उद्यानोत्सवः

संस्कृतानुवादः - श्रीमती एम्. जयलक्ष्मीः
तेलुगु मूलम् - श्रीमती उत्तरफलगुणी

कर्कटे पूर्वफल्गुण्यां तुलसीकाननोद्भवाम्।
पाण्ड्ये विश्वम्भरां देवीं वन्दे श्रीरङ्गनायकीम्।।

पाण्ड्यदेशे श्रीविष्णुचित्तमहोदयस्य तुलसीवने आषाढमासे शुक्लचतुर्थ्यां भौमवासरे पूर्वफल्गुणी नक्षत्रे तुलालग्ने भूदेव्याः अंशेन आण्डाल् देवी (गोदादेवी) आविर्भूता आसीत्।

अत एव कर्काटकमासे पूर्वफल्गुणीनक्षत्रे शात्तुमोरं निर्णीय तस्माद्दिनात् पूर्वं दश दिनानि उत्सवान् कुर्वन्तः, पूर्वफल्गुण्यां तिरुपति देवस्थाने शात्तुमोरं कुर्वन्ति। अयमेव उत्सवः तिरुवाडिप्पूरं शात्तुमोर इत्युच्यते।

### तिरुवाडिप्पुरस्य नेपथ्यम् -

वराहपुराणे वेङ्कटाचलमाहात्म्यघट्टे अष्टोत्तरशतनामाध्याये 'गोविन्दाय नमस्तुभ्यं श्रीनिवासाय ते नमः' इति श्रीवेङ्कटाचलपतेः गोविन्दराजस्वामिनः सह ऐक्यभावना प्रोक्ता।

कश्चियं यादवराजानां परिपालनकाले श्रीभगवद्रामनुजाचार्याः व्यराजन्त। तदा चिदम्बरगोविन्द-राजस्वामी कारणान्तरेण कावेरीनदीतीरे विद्यमानं श्रीचित्रकूटाख्यं पुराणप्रसिद्धं दिव्यक्षेत्रं त्यक्त्वा, तिरुमलस्य अडिवारे विद्यमानं तिरुपतिः नाम दिव्यनगरं समुपागच्छत्। अत्र श्रीवेङ्कटेश्वरस्य अपरावतारो भूत्वा देवताराधनाभिः राराजते। तदा श्रीभाष्यकाराः 'श्रीगोविन्दराजस्वामी भेदेन विना श्रीवेङ्कटेश्वरस्वामिना सह समस्तैश्वर्याणि अनुभवेत्' इति अमन्यत। तस्यां रीत्याम् आल्वार् महोदयस्य पुत्र्याः आण्डाल्देव्याः हस्ते उत्पलपुष्पं धारयित्वा, दिव्यैश्वर्याभिवृद्धिकारिण्याः व्यूहलक्ष्याः आवश्यकान् यन्त्रमन्त्रोद्धरणादीन् दिव्यसिंहासनस्योपरि स्थापितवन्तः। ते महोदयाः वैखानसागमानुसारेण श्रीगोविन्दराजस्वामिनं वामभागे प्रतिष्ठाप्य, समस्तोत्सवान् कर्तुं सङ्कल्पं कृतवन्तः।



श्रीगोदादेव्याः दिव्यावतारस्य काले श्रीपूर्वफल्गुणीनक्षत्रमासे श्रीगोदादेवी श्रीगोविन्दराज - स्वामिना सह अडिवारे 'अडिपुलि' (अलिपिरि) मण्टपे स्वयंभुवौ श्रीवेङ्कटालपति - दिव्यपादारविन्दौ प्रतिष्ठा - पयामासुः।



## पुरिशै उद्यानोत्सवः -

तिरुवाडिप्पूरशात्तुमोरदिने एव तिरुमल श्रीवेङ्कटेशः पुरिशै उद्याने प्रविशति। अस्मिन् कर्काटकमासे पूर्वफल्गुणीनक्षत्रे सायं समये श्रीमलयप्पस्वामी आन्दोलिकायाम् आगत्य महाप्रदक्षिणरूपेण पुरिशै उद्याने मण्टपं प्रविशति। तत्र तलिहनिवेदनानान्तरं गोष्ठीविनोदः प्रचलति। अनन्तरं स्वामी ततः प्रस्थाय पुन्नागतरु समीपम् आगत्य, नीराजनं स्वीकरोति। तत् शेषनीराजनं, पुष्पहारं, श्रीशठारिं च तद्वृक्षाय निवेदयन्ति। अर्चकाः शठारिं आन्दोलिकायां न निक्षिप्य तं शठारिम् आनयन्ति। स्वामी गजेन्द्रमोक्षमण्टपात् वीथ्याम् आगत्य नीराजनं स्वीकरोति। श्रीशठारेः प्रोक्षणरूपेण अभिषेकः क्रियते। पुनः स्वामिने नीराजनं दत्वा तत्छठारिम् आन्दोलिकायां निक्षिपन्ति। ततः स्वामी क्रमेण सन्निधिं प्रविशति। अयमेव तिरुमलायां क्रियमाणः पुरिशै उद्यानोत्सवः।

एतदुद्यानोत्सवः कदा कथं प्राचलदिति विषये कानिचन शासनानि एवं कथयन्ति।

## शासनेषु उद्यानोत्सवः -

तिरुमले १९८३ तमे वर्षे सेप्टेम्बर् मासे २३ तमे दिनाङ्के प्रचलितः उद्यानोत्सवः पुनरुद्धरितः उद्यानोत्सवः। अयम् उत्सवः पूर्वे प्राचलत्। परन्तु, महयकाले स्थगितः आसीत्। तोटतिरुणाल्, तोपुतिरुणाल् इति नाम्ना प्रसिद्धोऽयं उत्सवः प्रप्रथमतः सालुवनरसिंहस्य काले (सम्पुटः२, शासनं ११३) १४९४ तमे वर्षे फिब्रवरिमासे १७ तमदिनाङ्कस्य शासने दृश्यते। चन्द्रगिरिवासिनः, हारीतगोत्रोद्भवस्य, आश्वलायनसूत्रस्य, नियोगिनः निम्मननामधेयस्य दण्डनायकस्य अस्मिन् शासने उद्यानोत्सवः विंशतिः दिनानि प्राचलदिति ज्ञायते (दृश्यते)। उत्सवस्य आरम्भानन्तरम् एकादशे दिने दण्डनायकः तिम्मनः स्वामिनः कैङ्कर्यमकरोदिति कथ्यते।

श्रीकृष्णदेवरास्य काले १५४२ तमे वर्षे सेप्टेम्बर् मासे १५ तमे दिनाङ्के शासने (सम्पुटः३, शासनं२८) तिरुपतिसमीपस्थनरसिंहपुरवासी पण्ड्यारुशेन्नमुशेट्टियार् महोदयस्य पुत्रः पप्पुशेट्टि अय्यन् महोदयः श्रीगोविन्दराजस्वामी, तिरुमलश्रीनिवासश्च यदा उद्यानमण्टपं प्राविशतां तदा तिरुमल-तिरुपत्योः क्रियमाणान् सत्कारान् पृथक् पृथक् अकथयत्। अयं शासनेषु प्रोक्तः द्वितीयः उद्यानोत्सवः।

अच्युतदेवरायस्य काले १५३६ तमे वर्षे मार्च्मासे ६ तमदिनाङ्कस्य शासने (सम्पुटः४, शासनं ७३) श्रीपराशर भट्टाचार्यस्य शिष्यस्य मट्टमल्लयन् महोदयस्य पुत्रः रामय्यन् महोदयः रामभट्टोद्यानोत्सवाय, रामचन्द्रदीक्षितोद्यानोत्सवाय, अप्पापिळ्ळैउद्यानोत्सवाय च उभयदानमकरोदिति कथ्यते। सम्पुटं४, १८ तमे शासने जय्यपुनायकर् उद्यानोत्सवः १९ तमे शासने कुमारपल्लिवासिनः



कट्ल कोण्डमनायकर् महोदयस्य पुत्रस्य मूर्तिनायकर् महोदयस्य नाम्ना उद्यानोत्सवः प्राचलत्। सदाशिवरायस्य काले १५५४ तमे वर्षे आगस्ट्मासे ७ तमदिनाङ्कस्य शासनम् उद्यानोत्सवसम्बद्धम् एकैकसम्पूर्णशासनं भवति।

अस्मिन् शासने उद्यानोत्सवविधानक्रमः, श्रीमलयप्पस्वामिने, उभयदेव्योः (श्रीभूदेव्योः) कृते, कृष्णस्वामिने, विष्वक्सेनाय, भाष्यकारेभ्यश्च क्रियमाणाः उभयाः, सत्काराः समर्प्यमाणाः पडयः पडतराः इत्यादयः विस्तृतरूपेण कथिताः। एतदुत्सवव्ययार्थं मूर्तिनायकर्, राजेन्द्रसिंहश्च नल्लूरुसमीपे ५० सुवर्ण रेखैपन्, पुदिपट्लसरसि २५, आहत्य ७५ सुवर्ण रेखैपन् आदाय भूमिं क्रीत्वा तिरुमल श्रीभाण्डारे समर्पितमकुरुताम्। ७५ सुवर्ण रेखैपन् कथं व्ययं कुर्यादिति च अस्मिन् शासने निर्दिष्टमभवत्। मूर्तिनायकर्महोदयेन क्रीते उद्याने निर्मितमण्टपे स्वामी, श्रीभूदेव्यौ, श्रीकृष्णः, सेनाधिपतिः, श्रीरामानुजाचार्याः च ताल्लपाक तिरुमलय्यंगार्महोदयेन व्यवस्थापितस्य आणिब्रह्मोत्सवस्य (जून् -जूलै) अङ्कुरार्पणदिने श्रवणानक्षत्रयुक्तमूहूर्ते, आसीनाः भवन्ति। ततः चन्दनादिभिः तेभ्यः तिरुमञ्जनं (अभिषेकं) कुर्वन्ति। तदनु अलङ्कार-निवेदन-नीराजन-शठारिक्रमश्च अद्यापि प्रचलति।

अन्तिमवारं उद्यानोत्सवनाम्ना प्रचलितः उत्सवः वेङ्कटपतिरायस्य काले १६०६ तमे वर्षे मार्च्मासे ३१ तमस्य दिनाङ्कस्य ६,१३ तमे शासने दृश्यते। विजयनगरकोशाधिपतिः बोक्कसं क्रिष्टय्यमहोदयः स्वपितुः बोक्कसं नरसय्यमहोदयस्य नाम्ना प्रसिद्धे उद्याने मण्टपे एतदुत्सवमकरोत्। परन्तु अनन्तरं सः उत्सवः महम्मदीयकाले वा, कम्पेनीपालने वा, महन्तानाम् आध्वर्ये वा प्राचलत् इति वक्तुं आधाराः न सन्ति। माकिं ४०० वर्षाणामनन्तरं १९८३ तमे वर्षे सः उत्सवः प्रचलितः आसीत्।



उद्यानोत्सवनाम्ना न प्रचलितोऽपि तिरुमलस्वामिनः तिरुमलस्थमुख्यप्रदेशसंदर्शनं, वनभोजनम् इत्याद्युत्सवाः उद्यानोत्सवेऽन्तर्भवन्ति। एवं स्वामिनः पुरिशै उद्यानप्रवेशोत्सवस्य पुरिशैउद्यानोत्सवः इति नाम जातम्। अयमुत्सवः १५२७ तम कालिके तिरुमलशिलामण्टपे प्रचलति। गोदादेव्याः जन्मदिने एव अनन्ताल्वार् महोदयः परमपदमलभत। अतः तस्मिन् दिने पुरिशैउद्यानोत्सवं कुर्वन्ति। आण्डाल् देव्याः तिरुवाडिप्पूरोत्सवमपि कुर्वन्ति। तस्मिन् क्रमे आलवार्महोदयस्य उद्यानं प्रति जानीमः।

अनन्ताल्वार्महोदयः तस्य पत्नी च अधिक व्ययप्रयासादिभिः रामानुजपुष्पवाटिकां निर्मिताम् अकुरुताम्। तस्यां वाटिकायाम् अनन्ताल्वार् महोदयः विविधवर्णकुसुमानि विकसितान्यकरोत्। प्रतिदिनं तस्याः वाटिकायाः विचित्य पुष्पाणि, पुष्पमालाः कृत्वा ताः स्वामिनः आलये समर्पितवान्। ताभिः पुष्पामालाभिः प्रीत्या आपादमस्तकं



समलङ्कृतः स्वामी आनन्दनिलयः भक्तेभ्यः दर्शनं ददाति स्म। सः गोविन्दः विचित्रतटिद्भिः राराजते स्म।

अस्मिन् तरुणे स्वामी सन्तुष्टः 'एताः पुष्पमालाः सुन्दराः सन्ति, पुष्पवाटिका कियत् सुन्दरी भवति' इति मत्वा अनन्ताल्वार् महोदयस्य पुष्पवाटिकां द्रष्टुमैच्छत्। रात्रौ एकान्तसमये यदा अर्चकाः स्वर्णद्वारबन्धनमकुर्वन् तदा आनन्दनिलयः अलमेलुमङ्गदेव्या सह तां पुष्पवाटिकां प्राविशत्। तस्याः शोभया सन्तुष्टौ तौ तत्र गीतविहारादिभिः आनन्दमन्वभवताम्।

एवम् आनिशि वाटिकां भ्रमन्तौ तां वाटिकां छिन्नभिन्नां कृत्वा तौ दम्पती सुप्रभातवेलायाम् आनन्दनिलयं प्राविशताम्। परेद्युः पुष्पसेकरणार्थं वाटिकां प्रविश्य तां दृष्ट्वा कुपितः अभवत् अनन्ताल्वार्महोदयः। प्रतिदिनमेवमेव पुष्पवाटिकां सर्वनाशनं कुरुतः देवीदेवौ। तदा अनन्ताल्वार् महोदयः देवं प्रर्थितवान्। तदा स्वामी चिन्तयामास। रात्रौ तौ दम्पती आल्वार्महोदयस्य दृग्गोचरमभवताम्। यदा तौ गृह्णातुं प्रायतत तदा स्वामी अधावत्। केवलं देवी एव आल्वार्महोदयेन गृहीता अभवत्। सः तां देवीं गृहीत्वा तस्यां वाटिकायां चम्पकतरोः लताभिः अबध्नात्। सः माता तं बन्धविमुक्तां कुरु इति प्रार्थितवती। परन्तु सः निराकृत्य तस्या भर्त्रे निरीक्षणम् अकरोत्। तदा सः वाटिकायाः स्वामिनः दक्षिणवीथीं प्रविश्य आलयस्य अप्रदक्षिणरूपेण धावन्तं पुरुषं ग्रहीतुं यत्नं कृत्वा निराशया वाटिकां समुपागच्छत्। ततः सुप्रभातवेला अभवत्। अर्चकाः स्वर्णद्वारबन्धविमोचनं कृत्वा स्वामिनं जागृतम् अकुर्वन्। स्वामिनः वक्षःस्थले अलमेलुमङ्गायाः सुवर्णप्रतिमा नास्ति। तदा स्वामी अवदत् यत् अलमेलुमङ्गाम् अनन्ताल्वान् महोदयपुष्पवाटिकायाः आनयन्तु अर्चकाः इति। ततः अर्चकाः आल्वान्महोदयस्य गृहं गत्वा - 'हे अनन्तार्य! भवान् महान् भाग्यशाली! साक्षात् जगन्मातरमेव भवान् अबध्नात्। भवान् परमभक्तः' इत्यवदन्। तदा सः 'अहो! कृतं मया दारुणम्' इति चिन्तया मातुः साष्टाङ्गप्रणामं कृत्वा पुष्प भाण्डे उपावेश्य आलयमगच्छत्। तं वीक्ष्य श्रीनिवासः 'हे मातुल! तव पुत्रीं पुष्पभाण्डे उपावेश्य मह्यं समर्पयसि। अतः कन्यादाता मम श्वशुरः' इत्यवदत्। ततः देवी यथातथं स्वामिनः वक्षःस्थलं समलङ्कृतवती। स्वामी वस्त्रालङ्कार-चन्दनताम्बूलादिभिः अनन्ताल्वार् महोदयं सत्कृतवान्।

एवं प्रतिवर्षम् आडिमासे (कर्काटकमासे) पूर्वफाल्गुणीनक्षत्रे तिरुवाडिप्पूरोत्सवदिने स्वामी श्रीभूदेवी सहितो भूत्वा आलयस्य प्रदक्षिणरूपेण शोभायात्रां कुर्वन् पुष्पवाटिकां प्रविश्य यथातथं पूजानन्तरं पुष्पमालाभिः, शठारिणा सह अनन्तार्यबृन्दावने पुन्नागतरुसत्कारानन्तरं प्रदक्षिणरूपेण आलयं प्रविशति। अस्मिन् दिने एव आलवार्महोदयः परमपदमलङ्कृतवानिति, तस्यां वाटिकायां पुन्नागतरुरूपेण सः एव पुनः अजायत इति वदन्ति। दिनमिदं गोदादेव्याः जन्मदिनं तिरुवाडिप्पुरम् इति विशेषः इति कथ्यते।





# ध्रुवस्य वंशचरितम्

तेलुगु मूलम् - डा॥ वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - कु.यु. कृष्णवेणी

भागवतोत्तमः ध्रुवः राज्यं त्यक्त्वा वनवासं यदा गतवान्, तदा तस्य पुत्रः उत्कलः वैभवोपेतसिंहासनं स्वीकर्तुं न इष्टिवान्। वास्तविकतया सः जन्मादारभ्य एव सम्पूर्णसंतुष्ठरूपेण आसीत्। सः जनानां कृते जडः इव, अन्धः इव, मूकः इव, बधिरः इव, दृश्यते स्म। तथापि मित्राः, कुलज्येष्ठाः च सः बुद्धिहीनः इति मत्वा तस्य सोदरस्य वत्सस्य कृते राजसिंहासनं दत्तवन्तः। ध्रुवस्य भार्या इलायाः पुत्रः उत्कलः। ध्रुवपत्नी भ्रम्याः पुत्रः वत्सरुः प्रपञ्चचक्रवर्तिः जातः।

वत्सरोः भार्या स्वर्वीथी। तस्याः पुष्पार्णुः, तिग्मकेतुः, इषुः, ऊजुः, वसुः, जयुश्च इति षट् पुत्राः जाताः। पुष्पार्णोः प्रभा, दोषा इति द्वे भार्ये स्तः। तेषां वंशे एव चाक्षुषमनुः जन्म प्राप्तवान्। तस्य वंशे अङ्गमहाराजा जन्म प्राप्तवान्। अङ्गमहाराज्ञः भार्या सुनीथा। सुनीथायां वेणुः इति वक्रबुद्धिः जातः। तत् विषयः एवं रूपेण वर्णितः।

एकदा अङ्गमहाराजा अश्वमेधयागं कर्तुं सन्नद्धोऽभूत्। यज्ञनिर्वहणनिमित्तमागताः ऋत्विजः देवान् आह्वानं कर्तुं न शक्तवन्तः। अङ्गमहाराज्ञः भक्ति-श्रद्धाविषये लोपः नास्ति। यज्ञसम्भराः मलिनरहिताः एव सन्ति। ऋत्विजः मन्त्रोच्चारणे दक्षतायुक्ताः किमपि दोषं न कृतवन्तः। तथापि देवाः यज्ञभागं स्वीकर्तुं अग्रे नागताः। एतत् दृष्ट्वा राजा अत्यन्तदुःखितो जातः। ऋत्विजानाम् अनुमत्या सः मौनव्रतं त्यक्त्वा यज्ञस्थले उपविष्टान् सदस्यान् तदुदिश्य प्रश्नं कृतवान्। त्रिकालज्ञमहनीयाः अङ्गः प्रस्तुतजन्मनि किमपि पापं न कृतवान् मनसि अपि पापचिन्तनं न कृतवान्। तथापि पूर्वजन्मनि कृत पापकारणेन अधुना पुत्रहीनो जातः इति ज्ञापितवन्तः। पुत्रनिमित्तं सः श्रीहरेः यज्ञं करोति चेत् तेन देवेन सह देवा अपि आगत्य तस्य यज्ञभागं स्वीकरिष्यन्तीति सभ्याः सूचनां दत्तवन्तः। तां सूचनां अङ्गीकृत्य अङ्गमहाराजा विष्णुप्रीत्यर्थम् एकं यज्ञं कृतवान्। यज्ञफलरूपेण श्वेतवस्त्रपुरुषः एकः यज्ञकुण्डात् बहिः आगत्य पायसपात्रं दत्तवान्। सुवर्णपात्रे विद्यमानपायसम् अङ्गमहाराजा विप्राणाम् अनुमत्या स्वीकृत्य आघ्रात्वा तं भार्यायै दत्तवान्। तत् प्रसादफलितरूपेण सा गर्भं धृतवती। कालक्रमेण पुत्रः जातः। परन्तु सः पुत्रः किञ्चत् अधर्मवंशसम्बन्धिः; तत् कारणात् धर्महीनो जातः। किमर्थं नाम मृत्युः एव तस्य पितामहः। स बालः तस्य पितामहमनुसृत्य धर्मभ्रष्टोजातः। स्मृतिशास्त्रम् अनुसृत्य बालः साधरणतया मातुलगृहसम्प्रदायं अनुसरति। ''नराणां मातुल कर्म'' इति।



तस्य बालस्य नाम वेनः। सः बाल्यादारभ्य एव तस्य क्रूरस्वभावं प्रकटीकरणम् आरम्भं कृतवान्। अरण्यं गत्वा सः जन्तूनां वधं कृतवान्। स केवलं जन्तूनानेव न, अपि तु क्रीडने तेन सह विद्यमानबालान् अपि क्रूररूपेण हन्यते स्म। वेनस्य विचित्रं क्रूरस्वभावं दृष्ट्वा राजा बहुधा शिक्षितवान्। तथापि वेने परिवर्तनं नागतम्। तेन राजा विचारमुग्धो जातः। एकस्मिन् रात्रौ स एतत् विषयमेव तीव्रतया अलोचनां कुर्वन् गृहस्थजीवने विरक्तिं प्राप्तवान्। सपदि रात्रौ सः कस्यापि कृते अनुक्त्वा वनं गतवान्। सः विषयः भार्यापि न जानाति। विरक्तो भूत्वा राजा राज्यं त्यक्तवान् इति श्रुत्वा प्रजाः, पुरोहिताः, बान्धवाः अत्यन्तदुःखं प्राप्तवन्तः। ते सर्वे राज्ञः अन्वेषणं कृतवन्तः। फलितं नासीत्। तदा भृग्वादि मुनयः समावेश्य मन्त्रीणां सम्मतिर्नास्ति चेदपि वेनस्य राज्याभिषेकं कृतवन्तः।

सिंहासने उपविश्य सपदि वेनः गर्वितो जातः। मिथ्याहंकारेण स एव महान् इति चिन्तयन् महात्मनः अवमान -इत्यादि आरम्भं कृतवान्। तथापि वेनस्य क्रूरत्वं ये जानन्ति ते चोराः, दुष्टाः तदा सर्पदृष्टौ अनागत प्रच्छनमूषक इव यत्र सन्ति तत्रैव वेनस्य स्थितिः अंकुशविहीनगज इव जातः। द्विजाः यज्ञाः न करणीयाः इति, उद्घोषणं कारितवान्। तत् दृष्ट्वा मुनयः तमुद्दिश्य हितबोधं करणीयमिति निर्णयं स्वीकृतवन्तः। प्रजारक्षणनिमित्तं तं ते राजानं कृतवन्तः तत् कारणात् यदा स धर्मभ्रष्टो जातः तदा तम् उचितमार्गे स्थापनमपि तेषाम् उत्तरदायित्वम् इति ते चिन्तितवन्तः। तथैव सर्वे वेनस्य समीपं गत्वा हितबोधं कुर्वन् 'यज्ञादीनां स्थगनं देवानामगौरवः भवति, एतत् समुचितं नास्ति' इति ज्ञापितवन्तः।

मुनीनां वचनं श्रुत्वा वेनस्य कोपः आगतः। तेषां कृते एव स हितबोधकरणम् आरम्भं कृतवान्। तेषां वाचां किमपि प्रयोजनं नास्ति। तदा मुनयः क्रुद्धाः जाताः। तदा विना आयुर्धनं केवलं हुंकारेण वेनं मारितवन्तः। वेनस्य हननानन्तरं मुनिगणाः तेषां तेषाम् आश्रमं प्रति गतवन्तः। तदा वेनस्य माता अत्यन्तदुःखितो भूत्वा तस्याः पुत्रस्य देहं तैलपात्रे सम्यकृतया स्थापितवती।

वेनस्य मरणानन्तरं झटिति दुष्टाः चोराः विजृम्भणं कृतवन्तः। मुनयः राजानम् एव हननं कृतवन्तः। तादृशशक्तिः तेषां पार्श्वे विद्यते तथापि तूष्णीं स्थितवन्तः। किमर्थं नाम तत् कार्यं राज्ञा करणीयम् आसीत्। तथापि तेषां संहरणमपि समुचितं नास्ति। तादृशहननं तेषां ब्राह्मणत्वमेव नाशयति। परन्तु राजर्षिः अङ्गमहाराज्ञः वंशः न स्थगनीयमिति मनसि सङ्कल्प्य ते वेनस्य मृतशरीरे विद्यमानान् ऊरून् एकप्रत्येकपद्धत्यां वेगेन मथनं कृतवन्तः। तत् फलेन एकः वामनरूपेण वेनस्य शरीरात जातः। यथा काकः कृष्णवर्णः भवति कृष्णवर्णव्यक्तिः जातः। तस्य व्यक्तेः नाम बाहुकः। देहाङ्गाः बाहू, पादौ ह्रस्वाः। विद्यमानतालुभागः बृहत्, नासिका निम्ना, नेत्रे रक्तवर्णे स्तः, केशाः च ताम्रवर्णे सन्ति। एतादृशविद्यमानवामनः विनम्रो भूत्वा मुनिभिः - 'अहं कः? करणीयं वदन्तु' इति पृच्छति। तदा मुनयः तेन ''उपविशतु (निषीद) इति उक्तवन्तः। तथा स निषादो जातः। सः निषादः वेनस्य समस्तपापान् स्वीकृतवान्। तत् कारणादेव निषादजाति चौरत्वं दुष्टत्वं, हननम् इत्यादि पापकार्येषु एव सर्वदा निमग्नाः भवन्ति। तत् कारणादेव ते पर्वतेषु कोणेषु जीवन्ति।

अनन्तरं ब्राह्मणाः मुनयः पुनः वेनस्य मृतशरीरे विद्यमानबाहूद्वयमपि मथनं कृतवन्तः। तत् फलेन स्त्रीपुरुषयुगलौ उत्पन्नौ जातौ। वेदपारङ्गतमुनयः स्त्रीपुरुषयुगलौ साक्षात् विष्णोरंगसम्भूतौ इति ज्ञात्वा आनन्दं प्राप्तवन्तः। समस्तप्रपञ्चपोषणकर्ता विष्णुभगवतः संकल्पांशमेव स पुरुषः। भगवन्तं कदापि न त्यजति लक्ष्मीदेवी। तस्याः एव अंशरूपेण सा वनिता उद्भुता।

अस्मिन् संदर्भे ''पुरुषस्यानपायिनी'' इति भागवते उक्तम्। द्विव्यतेजोसम्पन्नं पुरुषं दृष्ट्वा महर्षयः एवं रूपेण कीर्तनं कृतवन्तः। तेषु द्वयेषु पुरुषः तस्य यशसं सर्वत्र प्रपञ्चे व्यापकं कृतवान्। स एव पृथुः इति नाम्ना प्रसिद्धो जातः। सर्वाङ्गसुन्दरी एषा अर्चि इति नाम्ना प्रसिद्धो भूत्वा पृथुं पतिरूपेण स्वीकृतवती। भगवानेव तस्य शाक्त्यंशया पृथुरूपेण आविर्भावं प्राप्तवान्। लक्ष्मीदेवी भगवतः नित्यसहचरी तत् कारणात् तस्य अंशद्वारा अर्चिरूपेण आविर्भुता जाता।



# बालविनोदिनी



# विद्या विवेकरहितस्य

एकस्मिन् ग्रामे चत्वारः स्नेहिताः आसन्। तेषु त्रयः शास्त्रेषु पारङ्गताः। परन्तु बुद्धिविहीनाः। अपरः तु शास्त्रं किमपि न जानाति परन्तु बुद्धिमान् एव आसीत्।

एकदा ते चिन्तितवन्तः - 'अन्यदेशान् गत्वा अस्माकं पाण्डित्यं प्रदर्श्य धनसम्पादनं कुर्मः' इति। एवं चिन्तयित्वा ते देशान्तरं प्रस्थिताः। मार्गे ते एकस्य मृतव्याघ्रस्य अस्थीनि दृष्टवन्तः। तदा प्रथमः उक्तवान् - 'भोः मित्राः अस्माकं विद्यायाः परीक्षा कर्तुम् एषः एव अवसरः। वयम् एतं व्याघ्रं सजीवं कुर्मः' इति।

अनन्तरं सः व्याघ्रस्य अस्थीनि यथायोग्यं योजितवान्। द्वितीयः व्याघ्रस्य रक्तमांसचर्मादिकं योजितवान्। तृतीयः यदा व्याघ्रस्य जीवदानं कर्तुम् उद्युक्तः तदा चतुर्थः उक्तवान् - 'भो तस्य जीवदानं न करणीयम्' इति।

तदा तृतीयः उक्तवान् - 'मूर्ख, मया अपि मम विद्यायाः महत्वं प्रदर्शनीया अस्ति। अतः अहं जीवदानं करोमि एव' इति।

तदा चतुर्थः उक्तवान् - 'तर्हि भवान् एकं क्षणं तिष्ठतु। अहं वृक्षम् आरोहामि' इति उक्त्वा एकं वृक्षम् आरूढवान्। तृतीयः सिंहस्य जीवदानं कृतवान् च। तदा जीवलब्धः सः व्याघ्रः त्रीन् अपि पण्डितान् भुक्तवान्, ततः निर्गतः च। अनन्तरं चतुर्थः वृक्षतः अवतीर्य ग्रामम् आगतवान्।

अतः वदन्ति - 'विद्या विवेकशून्यस्य विपरीतं फलिष्यति' इति।





*भोः! अद्य कृष्णाष्टमी अस्ति। अवकाशः अस्ति। श्रीकृष्णरूपिणं वेङ्कटकृष्णं सन्दर्श्य प्रसादं स्वीकरोमि। भवानपि आगच्छतु!!*



# कणेभ्यः आरोग्यपरिरक्षणम्

तेलुगु मूलम् - डा. चिट्टिभोट्ल मधुसूदनशर्मा
संस्कृतानुवादः - डि.हरिकृष्णः

कणाः (long peppers) कस्याश्चित् लतायाः फलानि। तप्ताः/शुष्काः कणाः औषधविक्रयशालासु आवर्षं लभ्यन्ते।

तीक्ष्णगुणान्विताः इति कारणात् 'तीक्ष्णतण्डुलानि' इति, उष्णगुणत्वात् 'ऊषण' इति, कणिकसदृशत्वात् ''कणाः' इति संस्कृते अस्य नामान्तराणि।

आङ्ग्ले long pepper इति नाम्ना व्यवहृतस्य अस्य शास्त्रीयं नाम 'पैपर् लाङ्गम्' अस्ति। अयं पापिलियोनेसि इति वृक्षजातेः सम्बद्धः वर्तते।

नानाविधान् रसायनान्, औषधगुणान् एषु निक्षिप्य भगवान् समस्तमानवानां कृते दत्तवान्। वयं एनान् सम्यक्तया उपयुज्य परिपूर्णारोग्यं प्राप्नुमः।

कणान् शोषयित्वा एव प्रयोक्तव्यम्। नानाविधाः एभ्यः अनारोग्यसमस्याः कथं परिष्कुर्मः इति ज्ञास्यामः।

### कफे -

प्रतिदिनं प्रातः रिक्तोदरे १ ग्रा. कणचूर्णं १०० मि.ली. किञ्चिदुष्णे जले सम्मेल्य सेवनेन व्याधिनिरोधकशक्तिः वर्धित्वा नस्यसमस्याः, कफसमस्याः च न्यूनीभवन्ति।

### बालेषु उदरक्रिमीणां कृते -

प्रतिदिनं १,२ वारं वयोनुसारं एकैकवारं ३-५ चट्टक परिमितं चूर्णं मधुना सह सेवनेन उदरस्थ क्रिमयः नश्यन्ति। एवमेव आहारः सम्यक्तया जीर्णो भूत्वा बालकाः आरोग्येण भवन्ति।

### दीर्घकालिकज्वरेषु -

५० ग्रा. कणचूर्णं १०० ग्रा. गुडेन सह पेषयित्वा, स्थाप्य प्रतिदिनं प्रातः सायं एकैकस्मिन् समये १,२, ग्रा. औषधं स्वीकृत्य एकचषकपरिमाणं लघूष्णं दुग्धं सेवयेत्।

### ग्यासूट्रबुल् -

कणान्, शुण्ठीः, मरीचान्, जीरकान् च संशोष्य कृतं चूर्णम् एकैकं २५ ग्रा., लवणं च १०० ग्रा. सम्मेल्य स्थाप्य प्रतिदिनं भोजनात् अर्धघण्टा पूर्वं १०० मि.ली. उष्णजले १,२ ग्रा. चूर्णं, १/२ निम्बफलरसं सम्मेल्य सेवनेन उदरपीडाः वातरोगाः विनश्य बुभुक्षादयः सम्यक्तया भवन्ति।

### दन्तधावनचूर्णम् -

कण-जीरक-सैन्धवलवणचूर्णान् एकैकं ५० ग्रा. प्रमाणेन सम्मेल्य, स्थाप्य प्रतिदिनं दन्तधावनचूर्णतया उपयुज्मः चेत् दन्तपीडाः, मुखदुर्वासनादयः समस्याः न्यूनीभवन्ति।






Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

## तिरुमलतिरुपतिदेवस्थानम्

# आन्ध्रप्रदेशराज्यस्य राजधान्याम् अमरावत्यां ति.ति.दे. श्रीवेङ्कटेश्वरस्वामिनः नूतनालये प्रतिष्ठार्थं श्रीवेङ्कटेश्वरस्वामिनः मूलविराट् विग्रहनिर्माणसन्दर्भे शिलापूजा दृश्याणि (०४-०७-२०१९)

अस्मिन् कार्यक्रमे
ति.ति.दे. धर्मकर्तृमण्डलि अध्यक्षः श्री वै.वि.सुब्बरेड्डि वर्यः,
ति.ति.दे. आगमशास्त्रसलहादार् जनाः, पण्डिताः,
अर्चकाः, अधिकारिणः, शिल्पाचार्याः एवं भक्ताः भागं गृहीतवन्तः।















